॥ अथ ॥

# शिवसहस्रनाम स्तोत्रं



प्रकाशकः—

ठाकुरप्रसाद एण्ड सन्स बुकसेलर,

राजादरवाजा, भाग-कचौड़ीगली, वाराणसी।    मूल्य ५० पै.

श्रीगणेशाय नमः

शि. १

# अथ शिवसहस्रनामस्तोत्रं प्रारभ्यते

स. १

श्रीगणेशाय नमः। श्रीपार्वतीपरमेश्वराभ्यां नमोनमः। ॐ ऐश्वरं परमं तत्त्वमादिमध्यान्तवर्जितम्। आधारःसर्वभूतानामनाधारमविक्रियम् ॥१॥ अनन्तानन्तबोधांबुनिधिमद्भुतविक्रमम्। अम्बिकापतिमीशानमनीमंप्रणमाम्यहम् ॥२॥ ऐशमाद्यन्तनिर्मुक्तमतिशोभनमादरात्। नमामि विग्रहं साम्बं संसारार्णवभेषजम् ॥३॥ महदादिविशेषान्तं जगद्यस्याः समुत्थितम्। यस्यामेव लयंयाति वन्दे तामम्बिकामहम् ॥ ४ ॥ गुरुमूर्तिधरां गुह्यां गुह्यविज्ञानदायिनीम्। गुह्यभक्तजनप्रीतां गुहायां निहितां नमः ॥ ५ ॥ नत्वा गणेश्वरं स्कन्दं

शि॰ २

साम्बं सद्गुरुमेव च । वेदसाररसाख्या च व्याख्या सम्यग्विरच्यते ॥६॥
श्रीव्यास उवाच । एकदा मुनयः सर्वे द्वारकां द्रष्टुमागताः । वासुदेवं
च सोत्कंठाः कृष्णदर्शनलालसाः ॥ ७ ॥ ततः स भगवान्प्रीतः
पूजां चक्रे यथाविधि । तेषामाशीस्ततो गृह्य बहुमानपुरःसरम् ॥८॥
तैः पृष्टः कथयामास कौमारप्रभृतं च यत् । चरितं भूमिभारघ्नं
लोकानन्दकरं परम् ॥ ९ ॥ मार्कंडेयमुखाः सर्वे माध्याह्निक क्रियो-
त्थिताः । कृष्णः स्नानमथो चक्रे मृदक्षतकुशादिभिः ॥ १० ॥
पीताम्बरं त्रिपुंड्रं च धृत्वा रुद्राक्षमालिकाम् । सूर्योपस्थानसंध्यां च
स्मृतिधर्ममनुस्मरन् ॥ ११ ॥ शिवपूजां ततः कृष्णो गन्धपुष्पाक्ष-
तादिभिः । चकार विधिवद्भक्त्या नमस्कारयुतां शुभाम् ॥ १२ ॥
जय शंकर सोमेश रचरक्षेति चाब्रवीत् । जजाप शिवसाहस्रं भुक्ति-
मुक्तिप्रदं शुभम् ॥ १३ ॥ अनन्यमानसः शान्तः पद्मासनगतः

स॰ २

शुचिः । ततस्ते विस्मयापन्नाः दृष्ट्वा कृष्णविचेष्टितम् ॥ १४ ॥
मार्कण्डेयोऽवदत्कृष्णं बहुशो मुनिसंमतम् । मार्कण्डेय उवाच । त्वं कृष्णः
शि. कमलाकान्तः परमत्मा जगद्गुरुः । तव पूज्यः कथं शंभुरेतत्सर्वं स.
२ वदस्व मे ॥१५॥ व्यास उवाच । अथ ते मुनयः सर्वे मार्कण्डेयंसमर्च्य
यत्न् । वचोभिर्वासुदेवस्य पृष्टं साधुत्वयेति च ॥ १६ ॥ श्रीकृष्णउवाच ।
साधुसाधु मुने पृष्टं हिताय सकलस्य च । अज्ञातं तव नास्त्येव तथा-
ऽपि च वदाम्यहम् ॥ १७ ॥ दैवतं सर्वदेवानां सर्वकारणकारणम् ।
जोतिर्यत्परमानन्द सावधानमतिः शृणु ॥१८॥ विश्वस्याधारमीशानं
गुणातीतमजं परम् । जगतस्तस्थुषो ह्यात्मा मममूलं महामुने ॥१९॥
यो देवः सर्वदेवानां ध्येयः पूज्यः सदाशिवः । स शिवः स महादेवः
शंकरश्च निरंजनः ॥ २० ॥ तस्मान्नान्यः परो देवः त्रिषु लोकेषु २
विद्यते । सर्वज्ञः सर्वगः शम्भुः सर्वात्मा सर्वतोमुखः ॥ २१ ॥ पठ्यते

शि. ४

सर्वसिद्धान्तैर्वेदान्तैर्यो मुनीश्वरः। तस्मिन् भक्तिर्महादेवे मम ध्यातुश्च
निश्चला ॥ २२ ॥ महेशः परमं ब्रह्म शान्तः सूक्ष्मः परात्परः।
सर्वान्तरः सर्वसाक्षी चिन्मयस्तमसः परः ॥ २३ ॥ निर्विकल्पो
निराभासो निस्संगो निरुपद्रवः। निर्लेपः सकलाध्यक्षो महापुरुष
ईश्वरः ॥२४॥ तस्य चेच्छाभवत्पूर्वं जगत्स्थित्यन्तकारिणी। वामांगा-
द्भवत्तस्य सोऽहंविष्णुरिति स्मृतः ॥२५॥ जनयामास धातारं दक्षिणां-
गात्सदाशिवः। मध्यतो रुद्रमीशानं कालात्मा परमेश्वरः ॥ २६ ॥
तपश्चरन्तु भो वत्सा अब्रवीदिति तान् शिवः। ततस्ते शिवमात्मानं
प्रोचुः संयतमानसाः ॥२७॥ स्तुत्वा तु विविधैः स्तोत्रैः प्रणम्य च
पुनः पुन। ब्रह्मविष्णुमहेश्वरा ऊचुः। तपः केन प्रकारेण कर्तव्यं
परमेश्वर। ब्रूहि सर्वमशेषेण स्वात्मानं वेत्सि ना परः ॥ २८ ॥
श्रीमहादेव उवाच। कायेन मनसा वाचा ध्यानपूजाजपादिभिः।

स. ४

कामक्रोधादिरहितं तपः कुर्वन्तु भो सुराः ॥ २९ ॥ देवा ऊचुः ।
त्वया यत्कथितं शंभो दुर्ज्ञेयमजितात्मभिः । सौम्योपायमतो ब्रह्मन्व-
शि. दकारुण्यवारिधे ॥ ३० ॥ श्रीसदाशिव उवाच । शृणुध्वं सर्वपापघ्नं स.
५ भुक्तिमुक्तिप्रदं नृणाम् । सहस्रनामसद्विद्यां जपन्तु मम सुव्रताः ॥३१॥
यथा संसारमग्नानां मुक्तिर्भवति शाश्वती । शृण्वन्तु तद्विधानं हि महा-
पातकनाशनम् ॥३२॥ पठतां शृण्वतां सद्यो मुक्तिः स्यादनपायिनी ।
ब्रह्मचारी कृतस्नानः शुक्लवासा जितेन्द्रियः ॥ ३३ ॥ भस्मधारी
मुनिर्मौनी पद्मासनसमन्वितः । ध्यात्वा मां सकलाधीशं निराकारम-
नोश्वरम् ॥३४॥ पार्वतीसहितं शंभुं जटामुकुटमंडितम् । वसानं चर्म
वैयाघ्रं चन्द्रार्धं कृतशेखरम् ॥३५॥ त्र्यंबकं वृषभारूढं कृत्तिवाससमु-
ज्ज्वलम् । सुरार्चितपदद्वन्द्वं दिव्यभोगंसुसुन्दरम् ॥३६॥ बिभ्राणंसुप्रसन्नं ५
च कुठारवरदाभयम् । दुर्द्धर्षं कमलासीनं नागयज्ञोपवीतिनम् ॥ ३७ ॥

विश्वकायं चिदानन्दं शुद्धमक्षरमव्ययम् । सहस्रशिरसं शंभुमनन्तकरसं-
युतम् ॥३८॥ सहस्रचरणं दिव्यं सोमसूर्याग्निलोचनम् । जगद्योनिमजं
ब्रह्म शिवमाद्यं सनातनम् ॥ ३९ ॥ दंष्ट्राकरालं दुष्प्रेक्ष्यं सूर्यकोटि-
समप्रभम् । निशाकरकराकारं भेषजं भवरोगिणाम् ॥ ४० ॥
पिनाकिनं विशालाक्षं पशूनां पतिमीश्वरम् । कालात्मानं कालकालं
देवदेवं महेश्वरम् ॥ ४१ ॥ ज्ञानवैराग्यसम्पन्नं योगानन्दमयं परम् ।
शाश्वतैश्वर्यसम्पन्नं महायोगीश्वरेश्वरम् ॥ ४२ ॥ समस्तशक्तिसंयुक्तं
पुण्यकायं दुरासदम् । तारकं ब्रह्मसंपूर्णमणीयांसम्महत्तरम् ॥ ४३ ॥
यतीनां परमं ब्रह्म यतीनां तपसः फलम् । संयमीहृत्समासीनं तपस्वि-
जनसंवृतम् ॥४४॥ विधीन्द्रविष्णुनमितं मुनिसिद्धनिषेवितम् । महादेवं
महात्मानं देवानामपि दैवतम् ॥ ४५॥ शान्तं पवित्रमोंकारं ज्योतिषां
ज्योतिरुत्तमम् । शंकरो मे शिरः पातु ललाटं भाललोचनः । विश्वः

चतुर्द्दशौ पातु रुद्रः पातु भ्रुवौ मम ॥ ४६ ॥ गण्डो पातु महेशानः
श्रुतिरक्षतुपूर्वजः । कपोलौ मे महादेवः पातु नासां सदाशिवः ॥४७॥
शि. मुखं पातु हविर्भोक्ता ओष्ठौ पातु महेश्वरः। दन्तान् रक्षतु देवेशस्तालु
७ सोमकलाधरः ॥४८॥ रसनां परमानन्दः पातु गण्डौ शिवाप्रियः । स.
चिबुकं पातु मे शंभुः श्मश्रुं शत्रुविनाशनः ॥४९॥ कूर्चंपातु भवत्कण्ठं
नीलकंठो वतु ध्रुवम् । स्कन्धौ स्कन्दपतिः पातु बाहू पातु महा-
भुजः ॥ ५० ॥ उपबाहू महावीर्यः करौविबुधसत्तमः । अङ्गुली पातु
पंचास्यः पर्वाणिस्वसहस्रपात् ॥५१॥ हृदयं पातु सर्वात्मा स्तनौ पातु
पितामहः । उदरं हुतभुक्पातु मध्यं पातु महेश्वरः ॥ ५२ ॥
कुक्षौ पातु भवानीशः पृष्ठं पातु कुलेश्वरः । प्राणान् मे प्राणदः पातु
नाभि भीमः कटिं विभुः ॥५३॥ सक्थिनी पातु मे भर्गो जानुनी मे ७
जनाधिपः । जंघे पुरारिपुः पातु चरणौ भवनाशनः ॥ ५४ ॥

शरीरं पातु मे शर्वो बाह्यमभ्यन्तरं शिवः । इन्द्रियाणि हरः पातु सर्वत्र जयवर्द्धनः ॥५५॥ पूर्वे दिशि मृडः पातु दक्षिणे यमसूदनः । वारुण्यां सलिलाधीश उदीच्यां मे महीधरः ॥ ५६ ॥ ईशान्यां पातु भूतेश आग्नेय्यां रविलोचनः । नैर्ऋत्यां भूतभृत्पातु वायव्यां बलवर्द्धनः ॥ ५७ ॥ ऊर्ध्वं पातु मखद्वेषी ह्यधः संसारनाशनः । सर्वतः सुखदः पातु बुद्धिं पातु सुलोचनः ॥५८॥ एवं न्यासादिकं कृत्वा साक्षाच्छंभुमयो भवेत् । ॐनमो हिरण्यबाह्वादि पठेन्मन्त्रं सुभक्तितः । ॥ ५९ ॥ सद्योजातादिभिर्मन्त्रैर्नमस्कुर्यात्सदाशिवम् । ततः सहस्रनामेदं पठितव्यं मुमुक्षुभिः ॥ ६० ॥ सद्योजातं प्रपद्यामि सद्यो जाताय वै नमोनमः भवे भवेनातिभवे भवस्व मां भवोद्भवाय नमः । वामदेवायनमो ज्येष्ठाय नमःश्रेष्ठाय नमो रुद्राय नमः कालायनमः कलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनाय नमः सर्वभू-

तदमनायनमोमनोन्मनायनमः। अघोरेभ्योऽथघोरेभ्यो घोर घोरतरेभ्यः
सर्वेभ्यः सर्वसर्वेभ्यो नमस्ते ऽस्तु रुद्ररूपेभ्यः। तत्पुरुषायविद्महेमहा-
देवायधीमहि। तन्नोरुद्रः प्रचोदयात्। ईशानः सर्वविद्यानामीश्वरः
सर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवो मे अस्तुसदाशिवोम्॥
सर्वकार्यकरंपुण्यं महापातकनाशनम्। सर्वगुह्यतमं दिव्यं सर्वलोक-
हितप्रदम्॥ ६१॥ मंत्राणांपरमोमंत्रोभवदुःखविनाशकृत्। ॐनमः
शंभवेचेतिषड्भिर्मन्त्रैः षडंगवित्॥ ६२॥ न्यासं कृत्वा तु विधिव-
त्सम्यग्ध्यानंततश्चरेत्। ॐ अस्यश्रीवेदसाराख्यपरमदिव्यशिवसहस्र-
नामस्तोत्रमंत्रस्यभगवान्नारायणऋषिः अनुष्टुप्छन्दः। श्रीसाम्बसदा-
शिवः परमात्मादेवता। ॐ नम इति बीजं॥ शिवायेति शक्तिः चैतन्य-
मिति कीलकम्। श्रीसाम्बसदाशिवप्रीत्यर्थंजपेविनियोगः। अथ
न्यासः। ॐनमः शम्भवे च अंगुष्ठाभ्यां नमः। ॐनमोमयोभवायचत-

जंनी० । ॐनमः शंकराय च मध्यमा० । ॐनमो मयस्करायचअ-
नामिका० । ॐनमः शिवायचकनिष्ठिका० । ॐनमः शिवतराय च
शि करतलकरपृष्ठाभ्यां० । एवं हृदयादिन्यासः । अथ ध्यानम् । कोटि- स.
१० सूर्यप्रतीकाशंत्रिनेत्रं चंद्रशेखरम् । शूलटंकगदाचक्रकुन्तपाशधरं-
विभुम् ॥१॥ कैलासाद्रिप्रतिशशाङ्कलयास्फूर्जज्जटामंडलम् । नासा-
लोकनतत्परंत्रिनयनंवीरासनाध्यासितम् । मुद्राटंककुरङ्गजानुविलस-
द्बाहुंप्रसन्नाननंकक्षाबद्धभुजङ्गमंमुनिवृतंवन्देमहेशंपरम् ॥२॥ धवलव-
पुषमिन्दोर्मण्डलेसन्निविष्टंभुजगवलयहारंभस्मदिग्धांगमीशम् । हरिण-
परशुपाणिंचारुचन्द्रार्द्धमौलिंहृदयकमलमध्येसन्ततंचिन्तयामि ॥ ३ ॥
एवंध्यात्वापंचोपचारैर्मानसपूजांकुर्यात् । लंपृथिव्यात्मनेगंधम् । हं
आकाशात्मने पुष्पम् । यं वायव्यात्मने धूपम् । रं तेजात्मने दीपम्॥ १०
वं अमृतात्मनेनैवेद्यम् । सं सर्वात्मनेसर्वोपचारम् । ॐनमोहिरण्यबाहवे

शि ११

हिरण्यवर्णायहिरण्यरूपाय हिरण्यपतयेऽम्बिकापतयेउमापतयेपशुपतये
नमोनमः । ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलम् । ऊर्ध्व
रेतंविरूपाक्षंविश्वरूपायवैनमोनमः। सर्वोवैरुद्रस्तस्मैरुद्रायनमोऽस्तु।
पुरुषो वै रुद्रः तस्मै नमोनमः । विश्वभूतं भुवनंचित्रं बहुधाजा-
तंजायमानंचयत् । सर्वोह्येषरुद्रस्तस्मैरुद्रायनमोऽस्तु । कद्रुद्रायप्रचेत-
सेमीढुष्टमायतव्यसे । वोचेमशंतम ँ हृदे । सर्वोह्ये षरुद्रस्तस्मै
रुद्रायनमोऽस्तु । सद्योजातं० । ॐनमः शिवायसाम्बायसगणायस-
सूनवे । सनन्दिनेसगङ्गाय सायुधायनमोनमः । श्रीमहादेवउवाच ।
ॐनमः परायदेवायशंकरायमहात्मने । कामिने नीलकंठाय निर्मलाय
कपर्दिने ॥ १ ॥ निर्विकल्पाय शान्ताय निरहंकारिणे नमः ।
अनर्घ्यायविशालायशालहस्ताय ते नमः ॥ २ ॥ निरंजनाय शर्वाय नि
संगपरमात्मने । नमः शिवायभर्गायगुणातीताय वेधसे ॥ ३ ॥

स. ११

शि. १२

महादेवाय पीताय पार्वतीपतये नमः । केवलाय महेशाय विशुद्धाय
बुधात्मने ॥ ४ ॥ कैवल्याय सुधेशाय निस्पृहाय स्वरूपिणे ।
नमः सोमविभूषाय कालायामिततेजसे ॥ ५ ॥ अजरायजगत्पित्रेजन-
कायपिनाकिने । निराधारायसिंहायमायातीतायतेनमः ॥ ६ ॥
बीजायसर्पभूषायपशूनांपतयेनमः । पुरन्दरायभद्राय पुरुषायमहीयसे
॥ ७ ॥ महासन्तोषरूपाय ज्ञानिने शुद्धबुद्धये । नमो वृद्धस्वरूपाय
तपसे परमात्मने ॥ ८ ॥ पूर्वजाय सुरेशायब्रह्मणेऽनन्तमूर्तये ।
निरक्षराय सूक्ष्माय कैलासपतये नमः ॥ ९ ॥ निरामयाय कान्ताय
निराकारायतेनमः । निरालंबायविश्वायनित्यायपतये नमः ॥ १० ॥
आत्मारामाय भव्याय पूज्याय परमेष्ठिने । विकर्तनायसूर्य्यायशंभवे-
विश्वरूपिणे ॥ ११ ॥ ताराय हंसनाथाय प्रतिसर्याय ते नमः ।
परावरेशरुद्राय भवायालंघ्यशक्तये ॥ १२ ॥ इन्द्रध्वंसनिधीशायका-

स. १२

[illegible] ॥ १२ ॥ [illegible]-
लहंत्रे मनस्विने ॥ विश्वमात्रे जगद्धात्रेजगन्नेत्राय ते नमः ॥ १३ ॥
जटिलाय विरागाय पवित्राय मृडाय च ॥ निरवद्याय पात्राय
स्तेनानां पतये नमः ॥ १४ ॥ नादाय रविनेत्राय व्योमकेशाय ते
नमः ॥ चतुर्भोगाय साराय योगिने नतमायिने ॥ १५ ॥ धर्मिष्ठाय
वरिष्ठाय पुरत्रयविघातिने ॥ गरिष्ठाय गिरीशाय वरदाय नमो नमः
॥ १६ ॥ व्याघ्रचर्माम्बरायाथ दिशावस्त्राय ते नमः ॥ परमप्रेम-
मन्त्राय प्रथमाय सुचक्षुषे ॥ १७ ॥ आद्याय शूल हस्ताय शिति-
कंठाय ते नमः ॥ उग्राय वामदेवाय श्रीकंठाय नमो नमः ॥ १८ ॥
विश्वेश्वराय सूर्याय गौरीशाय पराय च ॥ मृत्युंजयाय वीराय
वीरभद्राय ते नमः ॥ १९ ॥ कामनाशाय गुरुवे मुक्तिनाथाय ते
नमः ॥ विरूपाक्षाय सूताय वह्निनेत्राय ते नमः ॥२०॥ जलन्धरशि-
रश्छेत्रे हविषे हितकारिणे ॥ महाकालाय वैद्याय घृष्णेशाय नमो

नमः ॥२१॥ नम ॐकाररूपाय सोमनाथाय ते नमः ॥ रामेश्वराय
शुचये भीमेशाय नमो नमः ॥ २२ ॥ त्र्यम्बकाय निरीहाय केदाराय
नमो नमः ॥ गंगाधराय कवये नागनाथाय ते नमः ॥ २३ ॥
भस्मप्रियाय सूक्ष्माय लक्ष्मीशाय नमो नमः ॥ पूर्णाय भूतपतये
सर्वज्ञाय दयालवे ॥ २४ ॥ धर्माय धनदेशाय गजचर्माम्बराय च ॥
भालनेत्राय यज्ञाय श्रीशैलपतये नमः ॥ २५ ॥ कृशानुरेतसे
नीललोहिताय नमो नमः । अंधकासुरहंत्रे ते पावनाय बलाय च
॥ २६ ॥ चैतन्याय त्रिनेत्राय दक्षनाशकराय च । नमः सहस्र
शिरसे जयरूपाय ते नमः ॥ २७ ॥ नमः सहस्रचरणाय योगिहृत्पद्म-
वासिने । सद्योजाताय वन्द्याय सर्वदेवमयाय च ॥ २८ ॥ अमोदाय
प्रगल्भाय गायत्रीवल्लभाय च । व्योमाकाराय विप्राय नमो
विप्रप्रियाय च ॥ २९ ॥ अघोराय सुवेषाय श्वेतरूपाय ते नमः ।

शि. १४ स १४

विप्रप्रियाय च ॥ २९ ॥ अघोराय सुघोराय स्वतःरूपाय ते नमः ।
विद्वोत्तमाय चित्राय विश्वग्रासाय नन्दिने ॥३०॥ अधर्मशत्रुरूपाय
दुंदुभीमथनाय च । अजातशत्रवे तुभ्यं जगत्प्राणाय ते नमः ॥३१॥
शि. नमः ब्रह्मशिरच्छेत्रे पञ्चवक्त्रायखड्गिने । नमस्ते हरिकेशाय पञ्चवर्णाय स.
१५ वज्रिणे॥३२॥नमः पञ्चाक्षरायाथगोवर्द्धनधराय च । प्रभवे सर्वलोकानां
कालकूटविषादिने ॥३३॥ सिद्धेश्वराय सिद्धाय सहस्रवदनाय च ।
नमः सहस्रहस्ताय सहस्रनयनाय च ॥ ३४ ॥ सपत्नमूर्तये तुभ्यं
जिष्णवे जितशत्रवे । काशीनाथाय गेह्याय नमस्ते विश्वसाक्षिणे
॥३५॥ हेतवे सर्वजोवानां पालकाय नमो ममः । जगत्संहारकायाथ
त्रिधावस्थाय ते नमः ॥३६॥ एकादशस्वरूपाय नमस्ते वह्निमूर्तये ।
नरसिंहमहादर्पघातिने शरभाय च ॥ ३७ ॥ भस्माभ्यक्ताय तीर्थाय १५
जाह्नवीजनकाय च । देवदानवदैत्यानां गुरवे ते नमो नमः ।
॥ ३८ ॥ दलितांजनभासाय नमो वायुस्वरूपिणे । स्वेच्छामं

त्रिस्वरूपाय प्रसिद्धाय नमो नमः ॥ ३९ ॥ वृषध्वजाय गोष्ठ्याय
जगद्यंत्रप्रवर्तिने । अनाथाय प्रजेशाय विष्णुगर्वहराय च ॥ ४० ॥
हरेर्विधातुः कलहनाशनाय नमो नमः । नमस्ते दशहस्ताय गगनाय
शि. नमो नमः ॥ ४१ ॥ कैवल्यफलदात्रे ते परमाय नमो नमः । स.
१६ ज्ञानाय ज्ञानगम्याय घंटारवप्रियाय च ॥ ४२ ॥ पद्मासनाय
पुष्टाय निर्वाणाय नमो नमः । अयोनये सुदेहाय ह्युत्तमाय नमो
नमः ॥ ४३ ॥ अन्तकालाधिपतये विशालाक्षाय ते नमः ।
कुबेरबन्धवे तुभ्यं सोमाय सुखदायिने ॥ ४४ ॥ अमृतेश्वररूपाय
कौबेराय नमो नमः । प्रियम्वदसमर्थाय धन्विने विभवे नमः ।४५।
गिरीशाय गिरित्राय गिरिशन्ताय ते नमः । नमस्ते पारिजाताय
पंचयज्ञाय ते नमः ।४६। तरुणाय विशिष्टाय बालरूपधराय १६
च । जीवितेशाय तुष्टाय पुष्टानां पतये नमः ॥ ४७ ॥ भवहेत्यै
हिरण्याय कनिष्ठाय नमो नमः । मध्यमाय विधात्रे ते शूराय

सुभगाय च ॥ ४८ ॥ आदित्यतापनायथाथ नमस्ते रुद्रमन्यवे ।
महाह्रदाय ह्रस्वाय वामनाय नमो नमः ॥ ४९ ॥ नमस्तत्पुरुषार्थाय
शि. चतुर्हस्ताय ते नमः । नमोः धूर्जटये तुभ्यं जगदीशाय ते स.
१७ नमः ॥ ५० ॥ जगन्नाथस्वरूपाय लीलाविग्रहरूपिणे । अनघाय
नमस्तुभ्यं अमराय नमो नमः ॥ ५१ ॥ अमृताय नमस्तुभ्यं
अच्छाय च नमो नमः । लोकाध्यक्षाय वै तुभ्यं अनादिनिधनाय
च ॥ ५२ ॥ व्यक्तेतराय व्यक्ताय नमस्ते परमाणवे । लघुस्थूल-
स्वरूपाय नमः परशुधारिणे ॥ ५३ ॥ नमः खट्वांगहस्ताय नाग-
हस्ताय ते नमः । घस्मराय नमस्तुभ्यं अजिताय नमो नमः ॥५४॥
आणिमादिगुणेशाय पंचब्रह्ममयाय च । पुरातनाय शुद्धाय १७
बलप्रमथनाय च ॥ ५५ ॥ पुण्योदयाय पद्माय विरक्ताय नमो
नमः । उदाराय विचित्राय विचित्रगतये नमः ॥ ५६ ॥ वाग्वि-

शुद्धाय चित्ताय निर्गुणाय नमो नमः । परमेशाय शेषाय नमः
पद्मधराय च ॥ ५७ ॥ महेन्द्राय सुशालाय करवीरप्रियाय च ।
महापराक्रमायाय नमस्ते कालरूपिणे ॥ ५८ ॥ त्रिपुरश्रवसे लोक-
चूडारत्नाय ते नमः । साम्राज्यकलाग्रज्ञाय नमस्तुभ्यं त्रिशोमते ॥५९॥
वरेण्याय नमस्तुभ्यं वज्ररूपाय ते नमः । परमज्योनिषे पद्मगर्भाय
सलिलाय च ॥ ६० ॥ तत्त्वाधिकाय सर्गाय नमो दीर्घाय स्रग्विणे ।
नमस्ते पांडुरङ्गाय घोराय ब्रह्मरूपिणे ॥ ६१ ॥ निष्कलाय नमस्तुभ्यं
प्रपथ्याय नमो नमः । नमो जयाय क्षेत्राय क्षेत्राणां पतये
नमः ॥ ६२ ॥ कलाधराय पूताय पञ्चभूतात्मने नमः । अनि-
र्विण्णाय तथ्याय पापनाशकराय च ॥ ६३ ॥ त्रिशक्तचक्षुषे तुभ्यं
मंत्रिणेऽनन्तरूपिणे । सिद्धसाधकरूपाय मेदिनीरूपिणे नमः ॥६४॥
अग्रण्याय प्रतापाय सुधाहस्ताय ते नमः । श्रीवल्लभाय ईश्वराय

मधुराय नमो नमः ॥ ६५ ॥ उपाधिरहितायाथ नमः सुकृतराशये ।
नमो मुनीश्वरायाथ शिवानन्दाय ते नमः ॥६६॥ रिपुघ्नाय नमस्ते-
जोराशयेऽनुत्तमाय च । चतुर्मूर्तिवपुष्याय नमो बुद्धीन्द्रियात्मने ॥६७॥
उपद्रवहरायाथ प्रियसंदर्शनाय च । भुवननाथाय मूलाय वीतरा-
गाय ते नमः ॥ ६८ ॥ नैष्कर्म्याय विरूपाय षट्चक्राय विशुद्धये ।
कुलेशायाऽवनिभृते भुवनेशाय ते नमः ॥ ६९ ॥ हिरण्यबाहवे
जीववरदाय नमो नमः । आदिदेवाय भाग्याय चन्द्रसंजीवनाय
च ॥ ७० ॥ हराय बहुरूपाय प्रसन्नाय नमो नमः । आनन्दपूरि-
तायाथ कूटस्थाय नमो नमः ॥ ७१ ॥ नमो मोक्षफलायाथ शाश्व-
ताय विरागिणे । यज्ञभोक्त्रे सुषेणाय दक्षयज्ञविघातिने ॥ ७२ ॥
नमः सर्वात्मने तुभ्यं विश्वपालाय ते नमः । विश्वगर्भार्थगर्भाय
देवगर्भाय ते नमः ॥ ७३ ॥ संसारार्णवमग्नानाम् समुद्धरणहेतवे ।

मुनिप्रियाय स्वल्याय मूलप्रकृतये नमः ॥ ७४ ॥ समस्तसिद्धये
तेजोमूर्तये ते नमो नमः । आश्रमस्थापनायाथ वर्णिने सुन्दराय
च ॥ ७५ ॥ मृगबाणार्पणायाथ शारदावल्लभाय च ॥ विचित्रमा-
यिने तुभ्यं अलंकारिष्णवे नमः ॥ ७६ ॥ बर्हिर्मुखमहादर्पमथनाय
नमो नमः ॥ नमोऽष्टमूर्तये तुभ्यं निष्कलंकाय ते नमः ॥ ७७ ॥
नेमहव्याय भोज्याय यज्ञनाथाय ते नमः ॥ नमो मेध्याय मुख्याय
विशिष्टाय नमो नमः ॥ ७८ ॥ अम्बिकापतये तुभ्यं महादान्ताय
ते नमः सत्यप्रियाय सत्याय प्रियनृत्याय ते नमः ॥ ७९ ॥
नित्यतुष्टाय वेदित्रे मृगहस्ताय ते नमः ॥ अर्धनारीश्वरायाथ
कुठारायुधपाणये ॥८०॥ वराहभेदिने तुभ्यं नमः कंकालधारिणे ॥
महार्थाय सुतत्त्वाय कीर्तिस्तंभाय ते नमः ॥ ८१ ॥ नमः
कृतागमायाथ वेदान्त पठिताय च ॥ अश्रोत्राय श्रुतिमते बहुश्रुतिध-

शि०
२१

राय च ॥ ८२ ॥ आघ्राणाय नमस्तुभ्यं गन्धावघ्राणकारिणे ॥
पादहीनाय वोद्रेत्ते सर्वत्र गतये नमः ॥ ८३ ॥ त्र्यक्षाय जननेत्राय
नमस्तुभ्यं चिदात्मने ॥ रसज्ञाय नमस्तुभ्यं रसनारहिताय च
॥ ८४ ॥ अमूर्तायाथ मूर्ताय सदसस्पतये नमः ॥ नमोऽजितेन्द्रिया-
याथ परंज्योतिस्वरूपिणे ॥ ८५ ॥ नमस्ते सर्वमर्त्यानामादिकर्त्रे
भुवन्तये ॥ सर्गस्थितिविनाशानां कर्त्रे ते प्रेरकाय च ॥ ८६ ॥
नमोऽन्तर्यामिणे सर्वहृदिस्थाय नमो नमः ॥ चक्रभ्रमणकर्त्रे ते पुरा-
णाय नमो नमः ॥ ८७ ॥ वामदक्षिणहस्तोत्थलोकेशहरिशालिने ॥
नमः सकलकल्याणदायिने प्रसवाय च ॥ ८८ ॥ स्वभावोदार-
धीराय सूत्रकाराय ते नमः विषयार्णवमग्नानां समुद्धरणसेतवे
॥ ८९ ॥ अस्नेहस्नेहरूपाय वार्तातिक्रान्तवर्तिने ॥ यत्र सर्वं यतः
सर्वं सर्वं यत्र नमो नमः ॥ ९० ॥ नमो महार्णवायाथ भास्कराय

स०
२१

नमो नमः । भक्तिगम्याय भक्तानां सुलभाय नमो नमः ॥ ९१ ॥
दुष्प्रधर्षाय दुष्टानां विजयाय विवेकिनाम् । अतर्किताय लोकाय
सुलोकाय नमो नमः ॥ ९२ ॥ पुरयित्रे विशेषाय शुभाय ते नमो
नमः । नमः कर्पूरगौराय सर्पहाराय ते नमः ॥ ९३ ॥ नमः
संसारसाराय कमनीयाय ते नमः वह्नि दर्पविघाताय वायुदर्प-
विघातिने ॥ ९४ ॥ जरातीताय वीर्याय विश्वस्य व्यापिने नमः ।
सूर्यकोटिप्रकाशाय निष्क्रियाय नमो नमः ॥ ९५ ॥ चन्द्रकोटिसु-
शीताय विमलाय नमो नमः । नमो गूढस्वरूपाय दिशां च
पतये नमः ॥ ९६ ॥ नमः सत्यप्रतिज्ञाय समस्ताय समाधये ।
एकरूपाय शून्याय विश्वनाभिहृदाय च ॥ ९७ ॥ सर्वोत्तमाय
कौलाय प्राणिनां सुहृदे नमः । अज्ञानां पतये तुभ्यं चिन्मात्राय
नमो नमः ॥ ९८ ॥ वरिष्ठाय गोप्त्रे ते निधनायाग्रजाय च ।

योगीश्वराय योगाय योगगम्याय ते नमः ॥ १०० ॥ नमः प्राणे-
श्वरायाथ सर्वशक्तिधराय च । धर्माधाराय धन्याय पुष्कलाय
नमो नमः ॥ १ ॥ ब्रह्मेन्द्रोपेन्द्रचन्द्रार्कर्नमिताय नमो नमः । महर्षि- स०
शि. वन्दितायाथ प्रकाशाय सुधार्मिणे ॥ २ ॥ नमो हिरण्यगर्भाय नमो
२१ हिरण्मयाय च । जगद्बीजाय हरये सेव्याय क्रतवे नमः ॥ ३ ॥
आधिपत्याय काम्याय यशसे ते प्रचेतसे । नमो ब्रह्ममयायाथ नमस्ते
सकलाय च ॥ ४ ॥ नमस्ते रुक्मवर्णाय नमस्ते ब्रह्मयोनये ॥
योगात्मने स्वभीताय दिव्यनृत्याय ते नमः ॥ ५ ॥ जगतामेक-
बीजाय मायाबीजाय ते नमः ॥ सर्वहृत्संनिविष्टाय ब्रह्मचक्रभ्रमाय
च ॥ ६ ॥ ब्रह्मानन्दाय महते ब्रह्मणाय नमो नमः ॥ भूरिभारा- २१
र्तिसंहर्त्रे विधिसारथये नमः ॥ ७ ॥ हिरण्यगर्भपुत्राणां प्राणसंर-
क्षणाय च ॥ दुर्वाससे षड्विकाररहिताय नमो नमः ॥ ८ ॥

नमो देहार्धकान्ताय षडूर्मिरहिताय च । प्रकृत्यै भवनाशाय
ताम्राय परमेष्ठिने ॥ ९ ॥ अनन्तकोटिब्रह्मांडनायकाय नमो नमः ।
एकाकिने निर्मलाय द्रविणाय दमाय च ॥ १० ॥ नमस्त्रिलोच-
नायाथ शिपिविष्टाय बन्धवे । त्रिविष्टपेश्वरायाथ नमो व्याघ्रेश्वर-
राय च ॥ ११ ॥ विश्वेश्वराय दात्रे ते नमश्चन्द्रेश्वराय च ।
व्यासेश्वराय बुधिने यज्ञकेशाय ते नमः ॥ १२ ॥ जैगीषव्येश्व-
रायाथ दिवोदासेश्वराय च । नागेश्वराय न्यायाय न्यायानिर्वा-
हकाय च ॥ १३ ॥ शरण्याय सुपात्राय कालचक्रप्रवर्तिने ।
विचक्षणाय दंष्ट्राय वेदाश्वाय नमो नमः ॥ १४ ॥ नीलजीमूत-
देहाय परमात्मज्योतिषे नमः । शरणागतपालाय महाबलपराय
च ॥ १५ ॥ कृष्णस्य जयदात्रे ते बिल्वकेशाय ते नमः । दिव्यभो-
गाय दूताय कोविदाय नमो नमः ॥ १६ ॥ कामपाशाय चित्राय

शि.
२५

चित्रांगाय नमो नमः । नमो मातामहायाथ नमस्ते मातरिश्वने
॥ १७ ॥ निःसंगाय सुनेत्राय विघ्नेशाय जयाय च । व्यालसंभ
दंनायाथ मध्यस्थाय नमो नमः ॥ १८ ॥ अंगुष्ठशिरसा लंका
नाथदर्पहराय च । वैय्याघ्रपुरवासाय नमः सर्वेश्वराय च ॥ १९ ॥
नमः परावरेशाय जगत्स्थावरमूर्तये । नमोऽस्त्वनुपमेयाय शार्ङ्गिणे
विष्णुरूपिणे ॥ २० ॥ नारायणाय रामाय सुदोषाय नमो नमः ।
नमो ब्रह्माण्डमालाय गोधराय वरूथिने ॥ २१ ॥ नमः सोमाय
कूप्याय नमः पातालवासिने । नमस्ताराधिनाथाय वागीशाय
नमो नमः ॥ २२ ॥ सदाचाराय गौराय पुराणपुरुषाय च ।
अतर्क्यायाप्रमेयाय प्रमाणाय नमो नमः ॥ २३ ॥ कलिग्रासाय
भक्तानां भुक्तिमुक्तिप्रदायिने । संसारमोचनायाथ वर्णिने लिंग-
रूपिणे ॥ २४ ॥ सच्चिदानंदरूपाय पापराशिहराय च । गजा-

स.
२५

रये विदेहाय त्रिलिंगरहिताय च ॥ २५ ॥ अचिन्त्यशक्तये लंघ्य-
शाशनायाच्युताय च । नमो राजाधिराजाय चैतन्यविषयाय च
॥ २६ ॥ नमः शुद्धात्मने ब्रह्मज्योतिषे स्वरितदाय च । मयोभवे
च दुर्ज्ञेयसामर्थ्याय च यज्वने ॥ २७ ॥ चक्रेश्वराय वै तुभ्यं नमो
नक्षत्रमालिने । अनर्थनाशनायाथ भस्मलेपकराय च ॥ २८ ॥
सदानन्दाय विदुषे सगुणाय विरोधिने ॥ दुर्गमाय शुभाङ्गाय मृग-
व्याधाय ते नमः ॥ २९ ॥ प्रियाय धर्मधाम्ने ते प्रयोगाय विभा-
गिने ॥ आद्यायामृतपायाथ सोमपाय तपस्विने ॥ ३० ॥ नमो
विचित्रवेषाय पुष्टिसम्वर्द्धनाय च ॥ चिरन्तनाय धनुषे वृक्षाणां
पतये नमः ॥ ३१ ॥ निर्मायायाथाग्रगण्याय व्योमातीताय ते नमः ॥
संवत्सराय लोप्याय स्वानन्दायच्छविष्णवे ॥ ३२ ॥ व्यवसाय
फलान्ताय महाक्रतुप्रियाय च । गुणत्रयस्वरूपाय नमः सिद्धस्व-

शि. रूपिणे ॥ ३३ ॥ नमः स्वरूपरूपाय स्वेच्छाय पुरुषाय च । काला
त्पराय वेद्याय नमो ब्रह्माण्डरूपिणे ॥ ३४ ॥ अनित्यनित्यरूपाय
यदन्तर्वर्तिने नमः नमस्तीर्थ्याय कूल्याय पूर्णाय वटवे नमः स.
२७ ॥ ३५ ॥ पंचतन्मात्ररूपाय पंचकर्मेन्द्रियाय च । विशृंखलाय
दर्पाय नमस्ते विषयात्मने ॥ ३६ ॥ अनवद्याय शास्त्राय स्वतंत्राय
मृडाय च । नमः प्रौढाय प्राज्ञाय योगारूढाय ते नमः ॥ ३७ ॥
मंत्रज्ञाय प्रगल्भाय प्रदीपविमलाय च । विश्ववासाय दक्षाय
वेदनिःश्वसिताय च ॥ ३८ ॥ यज्ञाङ्गाय सुवीराय नागचूडाय
ते नमः ॥ व्याघ्राय बाणहस्ताय स्कन्दाय दक्षिणे नमः ॥ ३९ ॥
क्षेत्रज्ञाय रहस्याय स्वस्थाय च वरीयसे ॥ गह्वनाय विरामाय २७
सिद्धान्ताय नमो नमः ॥ ४० ॥ महीधराय गुह्याय वटवृक्षाय ते
नमः । ज्ञानदीपाय दुर्गाय सिद्धान्तैर्निश्चिताय च ॥ ४१ ॥

श्रीमते मुक्तिबीजाय कुशलाय विलासिने ॥ प्रेरकाय विशोकाय
हनिर्द्धानाय ते नमः ॥ ४२ ॥ गंभीराय सहायाय भोजनाय
शि. सुभोगिने ॥ महायज्ञाय तीक्ष्णाय नमस्ते भूतचारिणे ॥ ४३ ॥ स.
२८ नमः प्रतिष्ठितायाथ महोत्साहाय ते नमः । परमार्थाय शिशवे
प्रांशवे च कपालिने ॥ ४४ ॥ सहजाय गृहस्थाय संध्यानाथाय
विष्णवे । सद्भिः संपूजितायाथ वितलासुरघातिने ॥ ४५ ॥ जना-
धिपाय योग्याय कामेशाय किरीटिने ॥ अमोघविक्रमायाथ अज्ञा-
नमलघातिने ॥ ४६ ॥ संग्रामाय नरेशाय नमस्ते शुचिभस्मने ।
भूतिप्रियाय भूम्ने ते श्येनाय चतुराय च ॥ ४७ ॥ मनुष्यबाह्य-
गतये कृतज्ञाय शिखण्डिने । निर्लेपाय जटाढ्याय महाकालाय भैरवे २८
॥ ४८ ॥ नमो विरूपरूपाय शक्तिगम्याय ते नमः ॥ नमः शर्वाय
सदसत्सत्याय सुव्रताय च ॥ ४९ ॥ नमो भक्तप्रियायाथ श्वेतर

क्षापराय च ॥ सुकुमारमहापापहराय रथिने नमः ॥ ५० ॥
नमस्ते धर्मराजाय धनाध्यक्षाय सिद्धये ॥ महाभूताय कल्पाय
कल्पनारहिताय च ॥ ५१ ॥ ख्याताय जितविश्वाय गोकर्णाय
सुचारवे ॥ श्रोत्रियाय वदान्याय दुर्लभाय कुटुम्बिने ॥ ५२ ॥
विराजाय सुगन्धाय नमो विश्वम्भराय च भवातीताय वश्याय
नमस्ते सामगाय च ॥ ५३ ॥ चिन्मयाय नमः शुक्रज्योतिषे
क्षेत्रगाय च । अद्वैताय द्वितीयाय कल्पराजाय भोगिने ॥ ५४ ॥
सर्वभोगसमृद्धाय साम्भराय नमो नमः ॥ नमस्ते स्वप्रकाशाय
स्वच्छन्दाय सुतन्तवे ॥ ५५ ॥ सर्वज्ञमूर्तये तुभ्यं गुह्येशाय सुशान्तये ॥
शारदाय सुशीलाय कौशिकाय धनाय च ॥ ५६ ॥ अभिरामाय
तत्त्वाय व्यालकल्पाय ते नमः ॥ अरिष्टमथनायाथ सुप्रतीकाय ते
नमः ॥ ५७ ॥ आशवे ब्रह्मगर्भाय वरुणायार्द्रये नमः ॥ नमः

कालाग्निरुद्राय श्यामाय सुजनाय च ॥ ५८ ॥ अहिर्बुध्न्याय
राधाय दुष्टानां पतये नमः । नमः समयनाथाय समयाय गुह्याय
शि च ॥ ५९ ॥ दुर्लंघ्याय नमस्तुभ्यं छन्दःसाराय दंष्ट्रिणे । ज्यो- स.
२० तिर्लिङ्गाय मित्राय जगतां हितकारिणे ॥ ६० ॥ नमः कारुण्य-
निधये श्लोकाय जयशालिने ॥ ज्ञानोदयाय बीजाय जगद्विभ्रम-
हेतवे ॥ ६१ ॥ अवधूताय शिष्टाय छन्दसां पतये नमः ॥ नमः
फेन्याय गुह्याय सर्वबन्धविमोचने ॥ ६२ ॥ उदारकीर्तये शश्वत्प्र-
सन्नवदनाय च । वसवे वेदकाराय नमो । भ्राजिष्णुजिष्णवे ॥६३॥
चक्रिणे देवदेवाय गदाहस्ताय पुत्रिणे । पारिजातसुपुष्पाय
गणाधिपतये नमः ॥६४॥ सर्वशास्त्राधिपतये प्रजनेशाय ते नमः ॥ २०
सूक्ष्मप्रमाणभूताय सुरापारङ्गताय च ॥ ६५ ॥ अशरीरशरीराय
अप्रगल्भाय ते नमः ॥ सुकेशाय सुपुष्टाय श्रुतये पुष्पमालिने

॥ ६६॥ मुनिध्येयाय मुनये बीजसंस्थमरीचये। चामुण्डाजनका-
याय नमस्ते कृत्तिवाससे ॥ ६७ ॥ व्युप्तकेशाय लोप्याय धर्मगोठाय
शि० ते नमः। महावीर्याय दोसाय बुधायाशनये नमः ॥ ६८ ॥ त्रिशि- स०
३१ ष्टेष्टाय सेन्याय द्विपदे कारणाय च। कारणानां भगवते बाणद-
र्पहराय च ॥६८॥ अतिन्द्रियाय रम्याय जनानन्दकराय च। सदा-
शिवाय सौम्याय चिन्त्याय शशिमौलिने ॥ ७० ॥ नमस्ते जातुक-
र्णाय सूर्याध्यक्षाय ते नमः। ज्योतिषे कुंडगोराय वरदाया-
भयाय च ॥ ७१ ॥ वसन्ताय सुरभये जयारिमथनाय च। प्रेम्णे
पुरंजयायाथ पृषदश्वाय ते नमः ॥ ७२ ॥ रोचिष्णवे सुरजिते
श्वेतपोताय ते नमः। नमस्ते चक्ररोकाय तमिस्रग्रथनाय च ॥७३॥ ३१
प्रमाथिने निदाघाय चित्रगर्भाय ते नमः। शिशालशाय सुरथाय
तीर्थदेवाय ते नमः ॥ ७४ ॥ पतीनां पतये तुभ्यं विचित्र

शक्तये नमः । नमो निस्तूलरूपाय सवित्रे तपसे नमः ॥ ७५ ॥
अहंकारस्वरूपाय मेधाधिपतये नमः । अपाराय तत्त्वविदे चय-
द्योराय ते नमः ॥ ७६ ॥ पंचास्यायाग्रगण्याय विष्णुप्राणेश्वराय
च । अगोचराय याम्याय चेम्याय वडवाग्नये ॥ ७७ ॥ विक्रमाय
स्वन्तत्राय स्वन्तत्रगतये नमः । वनानां पतये तुभ्यं नमस्ते जम-
दग्नये ॥ ७८ ॥ अनावृताय मुक्ताय मातृकापतये नमः । नमस्ते
बीजकोशाय दिव्यानन्दाय ते नमः ॥ ७९ ॥ नमस्ते विश्वदेहाय
शान्तरागाय ते नमः । विलोचनसुदेवाय हेमगर्भाय ते नमः
॥८०॥ अनाद्यन्ताय चण्डाय नमो नाथाय ते नमः । ज्ञानस्कन्दाय
तुष्टाय कपिलाय महर्षये ॥ ८१ ॥ नमस्त्रिकाग्निकालाय देवसिंहाय
ते नमः । नमस्ते मणिरूपाय चतुर्वेदाय ते नमः ॥ ८२ ॥ स्वभा-
वाय स्वभासाय ह्यान्तर्यागाय ते नमः । नमः श्लोक्याय वन्याय

महाधर्माय ते नमः ॥ ८३ ॥ प्रसन्नाय नमस्तुभ्यं सर्वात्मज्योतिषे
नमः । स्वयंभुवे कुलेशाय क्षराक्षराय ते नमः ॥ ८४ ॥ स्वयंभुवे
त्रिमूर्तीनामध्यातीताय ते नमः । साक्षयभ्यं नरविश्वात्मन् कृपालो
शंभवे नमः ॥ ८५ ॥ श्रीमहादेव उवाच । जपन्तु मामिकां
देवा नाम्नां दशशतीमिमाम् । मम चातिप्रियकरीं महामोक्षप्रदा-
यिनीम् ॥ १ ॥ संग्रामे जयदात्रीं तु सर्वसिद्धिकरीं शुभाम् । यः
पठेच्छृणुयाद्वापि सर्वपापैः प्रमुच्यते ॥ २ ॥ पुत्रकामो लभेत्पुत्रं
राज्यकामस्तु राज्यताम् । प्राप्नुयात्परया भक्त्या धनधान्यादिकं
बहु ॥ ३ ॥ शिवालये नदीतीरेऽश्वत्थमूले विशेषतः । प्रजपेत्सि-
द्धदं देवं बिल्वमूले शमीतले ॥ ४ ॥ धनकामस्तु जुहुयात्
घृताक्तैर्बिल्वपत्रकैः । मोक्षकामः सुगन्धेन घृतेन प्रतिनामतः ॥ ५ ॥
पुत्रकामस्तु जुहुयात्तिलाक्तेन तथांधसा । आयुष्कामस्तु जुहुया-

दाज्येन मधुना तात ॥ ६ ॥ मत्समीपे प्रदोषे च स्पृष्ट्वा भक्त्या
जपेन्नरः ॥ जीवन्सारूप्यतां प्राप्य मम सायुज्यमाप्नुयात् ॥ ७ ॥
शि कालोऽपि जनशास्ता हि मम भक्तं न पश्यति ॥ अहं पुरस्सर-
२४ स्तस्य नेष्यामि गमनस्थलम् ॥ ८ ॥ त्रिसन्ध्यं प्रजपेत् भक्त्या स.
वत्सरं नियमान्वितः ॥ मच्चित्तो मन्मना भूत्वा साक्षान्मोक्षमवा-
प्नुयात् ॥ ९ ॥ रुद्रपाठेन यत्पुण्यं यत्पुण्यं वेदपाठतः । तत्सर्वं
प्राप्यते पुंभिरेकावृत्त्या पठेन्नरः ॥ १० ॥ कन्याकोटिप्रदानस्य
यत्फलं लभते नरः । तत्फलं लभते सम्यक् नाम्नां दशशतो-
जपात् ॥ ११ ॥ अश्वमेधसहस्रस्य यत्फलं लभते नरः । कपि-
लाकोटिदानस्य तत्फलं पठनात् भवेत् ॥ १२ ॥ यः शृणोति २४
महाविद्यां श्रावयेद्वापि भक्तितः । सोपि मुक्तिमवाप्नोति यत्र
गत्वा न शोचति ॥ १३ ॥ यक्षराक्षसवेतालग्रहकूष्मांडभैरवाः ।

पठनादस्य नश्यन्ति जीवेच्च शरदां शतम् ॥ १४ ॥ ब्रह्महत्यादि-
पापानां नाशः स्याच्छ्रवणेन तु । किं पुनः पठनादस्य मुक्तिः
शि० स्यादनपायिनी ॥ १५ ॥ इत्युक्त्वा स महादेवो भगवान्
३५ परमेश्वरः । पुनरप्याहं भगवान् कृपया परया युतः
॥ १६ ॥ दीयतां मम भक्तेभ्यो यदुक्तं अघघातकम् । इत्युक्त्वा-
न्तर्दधे देवः परमानन्दरूपधृक् ॥ १७ ॥ श्रीकृष्ण उवाच । एत-
देव पुरा रामो लब्धवान् कुंभसंभवात् । अरण्ये दण्डकारण्ये तु
प्रजजाप रघूद्वहः ॥ १८ ॥ नित्यं त्रिषवणस्नायी त्रिसन्ध्यासु
स्मरन् शिवम् । तदासौ देवदेवोऽपि प्रत्यक्षः प्राह राघवम् ॥ १९ ॥
महापाशुपतं दिव्यं प्रगृहाण रघूद्वहः । एतदाम्नाय पौलस्त्यं ३५
जहि मा शोकमर्हसि ॥ २० ॥ तदा प्रभृति भूदेवा प्रजपन्ति
सुभक्तितः । गृह्णन्तु परया भक्त्या भवन्तः सर्व एव हि ॥ २१ ॥

शि. श्रीव्यास उवाच । ततस्ते मुनयः सर्वे जगृहुर्मुनिपुंगवाः । सह-
स्रनामसद्विद्यां भक्तियुक्तेन चेतसा ॥ २२ ॥ एतद्वः कथितं सर्वं
हितार्थं मुनिसत्तमाः । गृह्णन्तु मम वाक्येन मुक्तिं प्राप्स्यथ स.
३६ निश्चितम् ॥ २३ ॥ भवद्भिरात्मशिष्येभ्यो दातव्यमिदमादरात् ।
नाम्नां सहस्रमेतद्धि लिखितं यन्निकेतने ॥ २४ ॥ अविमुक्तं तु
तद्गेहं नित्यं तिष्ठति शंकरः । अनेन मन्त्रितं भस्म त्वस्तु दुष्टवि-
घातकम् ॥ २५ ॥ पिशाचस्य विनाशाय जप्यमिदमुत्तमम् । नाम्ना
सहस्रेणानेन समं किञ्चिन्न विद्यते ॥ २६ ॥ इति श्रीपद्मपुराणे
उत्तरभागे शतसहस्रसंहितायां बिल्वकेश्वरमाहात्म्ये श्रीकृष्णमा-
र्कण्डेयसम्वादे वेदसाराख्यपरमदिव्यशिवसहस्रनामस्तोत्रे नवति- ३६
तमोऽध्यायः । श्रीभवानीशंकरार्पणमस्तु ।

# अथ सिद्धान्तबिन्दुस्तोत्रप्रारम्भः



श्रीगणेशाय: नमः । श्रीसाम्बसदाशिवाय नमः । न भूमिर्न तोयं न तेजो न वायुः न खं नेन्द्रियं वा न तेषां समूहः । अनेकांतिकत्वात्सुषुप्त्यैकसिद्धस्तदेको विशिष्टः शिवः केवलोहम् ॥ १ ॥ न वर्णा न वर्णाश्रमाचारधर्मा न मे धारणाध्यानयोगादयोऽपि । अनात्माश्रयोऽहं ममाध्यासहीनाः तदेको० ॥ २ ॥ न माता पिता वा न देवा न लोका न वेदा न यज्ञा न तीर्थं ब्रुवन्ति । सुषुप्तौ निरस्तानि शून्यात्मकत्वात्तदेको० ॥ ३ ॥ न सांख्यं न शैवं न तत्पांचरात्रं न जैनं मीमांसकादेर्मतं वा । विशिष्टानुभूत्या

विशुद्धात्मकत्वात्तदेको० ॥ ४ ॥ न चोर्ध्वं न चाधो न चांतर्न
हीनं न मध्यं न तिर्यङ्न पूर्वापरा दिक्। वियद्व्यापकत्वादखंडै-
शि करूपस्तदेको० ॥ ५ ॥ न शुक्लं न कृष्णं न रक्तं न पीतं न स.
१८ कुब्जं न पीनं न ह्रस्वं न दीर्घम्। अरूपं तथा ज्योतिराकार-
कत्वात्तदेको० ॥ ६ ॥ न शास्ता न शास्त्रं न शिष्यो न शिक्षा
न च त्वं न चाहं न चायं प्रपंचः। स्वरूपावबोधो विकल्पा-
सहिष्णुस्तदेको० ॥ ७ ॥ न जाग्रं न मे स्वप्नको वा सुषुप्तिर्न
विश्वो न वा तैजसः प्राज्ञको वा। ।अविद्यात्मकत्वात् त्रयाणां
तुरीयस्तदेको० ॥ ८ ॥ अभिव्यापकत्वाधितत्त्वप्रयोगात् स्वतः
सिद्धभावादनन्याश्रयत्वात्। जगत्तु च्छमेतत्समस्तं तदन्यत्तदेको १९
विशिष्टः शिवः ॥ ९ ॥ न चैकं तदन्यत् द्वितीयं कुतः स्यान्न वा
केवलत्वं न चाकेवलत्वम्। न शून्यं न चाशून्यमद्वैतकत्वात्कथं

सर्ववेदान्तसिद्धं ब्रवीमि ॥ १० ॥ इति श्रीमत्परमहंसपरिव्राजका-
चार्य श्रीमच्छंकराचार्यविरचितं सिद्धान्तबिन्दुस्तोत्रं सम्पूर्णम् ।
शि. अथ शिवमानसपूजाप्रारम्भः । श्रीगणेशाय नमः । रत्नैः
३९ कल्पितमासनं हिमजलैः स्नानं च दिव्याम्बरं नानारत्नविभूषितं
मृगमदामोदाङ्कितं चन्दनम् । जातीचम्पकबिल्वपत्ररचितं पुष्पं च
धूपं तथा दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥ १ ॥
सौवण मणिखंडरत्नरचिते पात्रे घृतं पायसं भक्ष्यं पंचविधं पयो
दधियुतं रंभाफलं पानसम् । शाकानामयुतं जलं रुचिकरं
कर्पूरखंडोज्ज्वलं ताम्बूलं मनसा मया विरचितं भक्त्या प्रभो स्वी-
कुरु ॥ २ ॥ छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं वीणा- ३९
भेरिमृदंगकाहलकलागीतं च नृत्यं तथा । साष्टाङ्गप्रणतिः स्तुति-
र्बहुविधा एतत्समस्तं मया संकल्पेन समर्पितं तव विभो पूजां

शि.
४०

गृहाण प्रभो ॥ ३ ॥ आत्मा त्वं गिरिजा मतिः सहचराः प्राणाः शरीरं गृहं पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः । सञ्चारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो यद्यत्कर्म करोमि तत्तदखिलं शम्भो तवाराधनम् ॥४॥ करचरणकृतंवा वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वापराधं । विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्रीमहादेव शम्भो ॥ ५ ॥

स
४०

॥ इति श्रीशिवमानसपूजन समाप्तम् ॥



# अथ रावणकृतशिवताण्डवस्तोत्रप्रारम्भः

श्रीगणेशाय नमः । जटाकटाहसम्भ्रमभ्रमन्निलिम्पनिर्झरी-
विलोलवीचिवल्लरी विराजमानमूर्धनि । धगद्धगद्धगज्ज्वलल्ललाटपट्ट-
पावके किशोरचन्द्रशेखरे रतिः प्रतिक्षणंमम ॥१॥ जटाटवीगलज्ज-
लप्रवाहपावितस्थले गलेऽवलम्ब्यलम्बितां भुजङ्गतुङ्गमालिकाम् ।
डमड्डमड्डमड्डमन्निनादवड्डमर्वयं, चकार चण्डताण्डवं तनोतु नः शिवः
शिवम् ॥२॥ धराधरेन्द्रनन्दिनीविलासबन्धुरबन्धुरस्फुरद्दिगन्तसन्तति
प्रमोदमानमानसे । कृपाकटाक्षधोरणीनिरुद्धदुर्धरापदि क्वचिच्चिदम्बरे
मनो विनोदमेतु वस्तुनि ॥ ३ ॥ जटाभुजङ्गपिङ्गलस्फुरत्फणा-
मणिप्रभा कदम्बकुंकुमद्रवप्रलिप्तदिग्वधूमुखे । मदान्धसिन्धुरस्फु-

ऽत्वगुत्तरीयमेदुरे मनोर्विनोदमद्भुतं बिभर्तु भूतभर्त्तरि ॥ ४ ॥ सहस्र-
लोचनप्रभृत्यशेषलेखशेखरप्रसूनधूलिधोरणीविधूसरांघ्रि—पीठभूः ।
शि. भुजङ्गराजमालया निबद्धजाटजूटकः श्रियै चिराय जायतां स.
४२ चकोरबन्धुशेखरः ॥ ५ ॥ ललाटचत्वरज्वलद्धनञ्जयस्फुलिङ्गभा
निपीतपञ्चसायकं नमन्निलिम्पनायकम् । सुधामयूखलेखया
विराजमानशेखरं महाकपालिसम्पदे शिरोजटालमस्तु नः ॥ ६ ॥
करालभालपट्टिकाधगद्धगद्धगज्ज्वलद्धनञ्जयाहुती कृतप्रचण्डपञ्चसा-
यके । धराधरेन्द्रनन्दिनी कुचाग्रचित्रपत्रक प्रकल्पनैकशिल्पिनि
त्रिलोचने मतिर्मम ॥ ७ ॥ नवीनमेघमण्डली निरुद्धदुर्धर-
स्फुरत्कुहूनिशीथिनीतमः प्रबन्धबद्धकन्धरः । निलि म्पनिर्झ-
रीधरस्तनोतु कृत्तिसुन्दरः कलानिधानबन्धुरः श्रियं जगद्- ४२
धुरन्धरः ॥ ८ ॥ प्रफुल्लनीलपङ्कजप्रपञ्चकालिमच्छटाविडम्बि-

म्बिकण्ठकन्धरारुचिप्रबन्धबन्धरम् । स्मरच्छिदं पुरच्छिदं भव-
च्छिदं मखच्छिदं गजच्छिदान्धकच्छिदं तमन्तकच्छिदं भजे ॥ ९ ॥
शि. अखर्वसर्वमङ्गला कलाकदम्बमञ्जरी रसप्रवाहमाधुरी विजृम्भणा- स
४२ मधुव्रतम् । स्मरान्तकं पुरान्तकं भवान्तकं मखान्तकं गजान्त
कान्धकान्तकं तमन्तकान्तकं भजे ॥ १० ॥ जयत्वदभ्रविभ्रमभ्र-
मद्भुजंगमस्फुरद्धगद्धगद्विनिर्गमत्करालभालहव्यवाट् । धिमिद्धिमिद्धि
मिध्वनन्मृदङ्ग तुङ्गमङ्गलध्वनिक्रमप्रवर्तितप्रचण्डताण्डवः शिवः ॥११॥
दृषद्विचित्रतल्पयोर्भुजङ्गमौक्तिकस्रजोर्गरिष्ठरत्नलोष्टयोः सुहृद्विपक्ष-
पक्षयोः । तृणारविन्दचक्षुषोः प्रजामहीमहेन्द्रयोः समं प्रवर्तयन् मनः
कदा सदाशिवं भजे ॥ १२ ॥ कदा निलिम्पनिर्झरीनिकुञ्जकोटरे ४१
वसन् विमुक्तदुर्मतिः सदा शिरःस्थमञ्जलिं वहन् । विमुक्तलोललोचनो
ललामभाल लग्नकः शिवेति मन्त्रमुच्चरन्कदा सुखी भवाम्यहम्

॥ १३ ॥ निलिम्पनाथनागरीकदम्बमौलिमल्लिकानिगुम्फनिर्भरक्ष-
रन्मधूष्णिकामनोहरः । तनोतु नो मनो मुदं विनोदिनीमहर्निशं
परश्रियः परंपदन्तदङ्गजत्विषाञ्चयः ॥ १४ ॥ प्रचण्डवाडवानलप्रभा-
शुभप्रचारिणी महाष्टसिद्धिकामिनीजनावहूतजल्पना । विमुक्तवाम-
लोचनाविवाहकालिकध्वनिः शिवेतिमन्त्रभूषणाजगज्जयाय जायताम्
॥ १५ ॥ इमं हि नित्यमेवमुक्तमुत्तमोत्तमं स्तवं पठन्स्मरन् ब्रुवन्नरो-
विशुद्धिमेति सन्ततम् । हरे गुरौ सुभक्तिमाशु याति नान्यथा
गतिं विमोहनं हि देहिनां सुशङ्करस्य चिन्तनम् ॥१६॥ पूजावसान-
समये दशवक्त्रगीतं यः शम्भुपूजनमिदं पठति प्रदोषे । तस्य
स्थिरां रथगजेन्द्र तुरङ्गयुक्तां लक्ष्मीं सदैव सुमुखीं प्रददाति
शम्भुः ॥ १७ ॥

। इति श्रीरावणविरचितं शिवताण्डवस्तोत्रं सम्पूर्णम् ।

# शिवाशिवस्तुतिः

शि.
४५

श्रीगणेशाय: नमः । चांपेयगौरार्द्धशरीरकायै कर्पूरगौरार्धशरीर-
काय । धमल्लिकायै च जटाधराय नमः शिवायै च नमः शिवाय
॥ १ ॥ रणत्कणत्कङ्कणनूपुरायै मिलत्फणाभासुरनूपुराय । हेमां
गदायै भुजगांगदाय नमः शिवायै० ॥ २ ॥ कस्तुरिमाकुंकुमच-
र्चितायै चितारजःपुञ्जविचर्चिताय । सुकुण्डलायै फणिकुण्डलाय
नमः शिवायै० ॥ ३ ॥ मन्दारमालाकुलितालकायै कपालमाला-
ङ्कितशेखराय । दिव्याम्बरायै च दिगम्बराय नमः शिवा० ॥ ४ ॥
भ्रात्फुल्लनीलोत्पललोचनायै विकासपंकेरुहलोचनाय । समेक्षणायै
विषमेक्षणाय नमः शिवायै० ॥ ५ ॥ अम्भोरुहश्यामलकुन्तलायै
तडित्प्रभाताम्रजटाधराय । जगज्जनन्यै जगदेकपित्रे नमः शिवायै
च नमः शिवाय ॥ ६ ॥ सदा शिवानां प्रियभूषणायै सदा शिवानां

स.
४९

प्रियभूषणाय । शिवान्वितायै च शिवान्विताय नमः शिवायै०
॥ ७ ॥ प्रपञ्चसृष्टेर्मुखलासदायै त्रैलोक्यसंहारकृतान्तकाय । कृत-
स्मरायै त्रिकृतस्मराय नमः शिवायै० ॥ ८ ॥ नमस्ते भगवद्रुद्र भा-
स्कराभिततेजसे । नमो भवाय देवाय शिवाय परमात्मने ॥ ९ ॥
शान्ताय क्षितिरूपाय सदासुरभिणे नमः । ईशानाय नमस्तुभ्यं
स्पर्शमात्राय ते नमः ॥ १० ॥ महादेवाय सोमाय अमृतेशाय ते
नमः । उग्राय यजमानाय नमो मीढुष्टमाय ते ॥ ११ ॥ नमोऽस्तु
ते शंकर शान्तमूर्ते नमोऽस्तु ते चन्द्रकलावतंस । नमोऽस्तु ते
कारणकारणाय नमोऽस्तु ते कारणवर्जिताय । स एव धन्यस्तव
भक्तिभाजां तवार्चनं यः कुरुते सदैव ॥ १२ ॥ मंत्रहीनं क्रियाहीनं
भक्तिहीनं सुरेश्वर । यत्पूजितं मया देव परिपूर्णं तदस्तु मे ॥ १३ ॥

॥ इति श्रीस्कन्दपुराणे शिवस्तुतिः सम्पूर्णा ॥

# अथ विश्वनाथाष्टकप्रारम्भः

शि. श्रीगणेशाय नमः । गङ्गातरङ्गरमणीयजटाकलापं गौरीनिर- स
४७ न्तरविभूषितवामभागम् । नारायणप्रियमनङ्गमदापहारं वाराणसी-
पुरपतिं भज विश्वनाथम् ॥ १ ॥ वाचामगोचरमनेकगुणस्वरूपं
वागीशविष्णुसुरसेवितपादपीठम् । वामेन विग्रहवरेण कलत्रवन्तं
वाराणसीपुरपतिं भज विश्वनाथम् ॥ २ ॥ भूताधिपं भुजगभूषण-
भूषिताङ्गं व्याघ्राजिनाम्बरधरं जटिलं त्रिनेत्रम् । पाशांकुशाभयवर-
प्रदशूलपाणिं वाराणसी० ॥ २ ॥ सीतांशुशोभितकिरीटविराजमानं
भालेक्षणानलविशोषितपञ्चबाणम् । नागाधिपारचितभासुरकर्णपूरं ४७
वाराणसी० ॥ ४ ॥ पञ्चाननं दुरितमत्तमतंगजानां नागान्तकं दनुज-
पुंगवपन्नगानाम् । दावानलं मरणशोकजराटवीनां वाराणसी० ॥ ५ ॥

शि.
४८

तेजोमयं सगुणनिर्गुणमद्वितीयमानन्दकन्दमपराजितमप्रमेयम् । नागात्मकं सकलनिष्कलमात्मरूपं वाराणसी० ॥ ६ ॥ आशा विहाय परिहृत्य परस्य निन्दां पापे रतिं च सुनिवार्य मनः समाधौ । आदाय हृत्कमलमध्यगतं परेशं वाराणसी० ॥ ७ ॥ रागादिदोषरहितं स्वजनानुरागं वैराग्यशान्तिनिलयं गिरिजासहायम् । माधुर्यधैर्यसुभगं गरलाभिरामं वाराणसी० ॥ ८ ॥ वाराणसीपुरपतेः स्तवनं शिवस्य व्याख्यातमष्टकमिदं पठते मनुष्यः । विद्यां श्रियं विपुलसौख्यमनन्तकीर्तिं सम्प्राप्य देहविलये लभते च मोक्षम् ॥ ९ ॥ व्यासाष्टकमिदं पुण्यं यः पठेच्छिवसन्निधौ । शिवलोकमवाप्नोति शिवेन सह मोदते ॥१०॥ इति श्रीव्यासकृतं विश्वनाथाष्टकं सम्पूर्णम्

स.
४८

पं० रामतेजशास्त्रिणा संस्कृतम् ।

मुद्रक [illegible] प्रेस, वाराणसी ।